

SAPTHAGIRI (SANSKRIT)
ILLUSTRATED MONTHLY
Volume: 8, Issue: 7
October-2021, Price Rs.5/- No. of Pages - 24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

सचित्रमासपत्रिका

अक्टोबर् २०२१

रू.५/-

११-१०-२०२१

इन्दुवासरः

रात्रौ - गरुडवाहनम्

तिरुमल

## श्रीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवाः

२०२१ अक्टोबर् ०७ तः १५ पर्यन्तम्

SIVAPRASAD



तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवाः
२०२१ अक्टोबर् ०७ तः १५ पर्यन्तम्



०७-१०-२०२१
बृहस्पतिवासरः
प्रातः
ध्वजारोहणम्



०७-१०-२०२१
बृहस्पतिवासरः
रात्रौ - महाशेषवाहनम्



०८-१०-२०२१
भृगुवासरः
प्रातः - लघुशेषवाहनम्

## गीतामृतम्



अर्जुन उवाच -

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम्।
सीदन्ति मम गात्राणि मुखं च परिशुष्यति।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते।।

(भगवद्गीता २८/१)

हे कृष्ण! पुरतः प्राप्तं योद्धुमिच्छन्तम् इमं स्वबन्धुजनं दृष्ट्वा वर्तमानस्य मम गात्राणि अवयवाः विशीर्यन्ते। किञ्च मम मुखं शुष्कीभवति। मम शरीरे कम्पः रोमोद्गमश्च जायते इति अर्जुनः कृष्णं प्रति अवोचत्।

## सङ्कीर्तनम्

हरिरसमविहारी स तु
सरसोयं मम श्रमसंहारी ।।हरि।।

दयानिवृततनुधारी सं
शयातिशयसञ्चारी
कयाप्यजितविकारी
क्रियामुख कृपाणधारी ।।हरि।।

सदा मिथ्याज्ञानी स तु
मदालिमताभिमानी
तदाश्रितसंधानी स तु
तदा तदा चिन्ताशयनानि ।।हरि।।

परामृतसम्पादी
स्थिरानन्दा स्वेदी
वरालापविवादी श्री
तिरुवेङ्कटगिरिदिव्यविनोदी ।।हरि।।

(अन्नमाचार्यसङ्कीर्तनम्)



सम्पादकीयम्

# ब्रह्मोत्सवेषु तिरुवेङ्कटेशः

भारतीयसनातनधर्मस्य संस्कृतेश्च प्रतिरूपतया देवालयाः भोभूयन्ते। भक्त्या भगवदाराधनं संस्कृतिरस्माकम्। भगवान् देवः च ''वेङ्कटेशसमो देवो न भूतो न भविष्यति'' इत्युक्तदिशा श्रीवेङ्कटेश्वरः एव। अस्य समः देवः, तिरुमलस्य समं क्षेत्रं च नास्ति एव।

लोकस्य विविधस्थानेभ्यः भक्ताः अभीष्टसिद्ध्यर्थं तथा भगवद्दर्शनाय च आसंवत्सरं तिरुमलक्षेत्रम् आगच्छन्ति। क्षणमात्रकाले भगवतः दर्शनेनापि ते मार्गे अनुभूतान् क्लेशान् विस्मरन्ति। ते देवस्थाने प्रचलिते प्रत्येकस्मिन्नपि कार्यक्रमे स्वपरिधीन् उल्लङ्घ्य सम्मिलितुम् इच्छन्ति। भक्तानां संख्या बृहत्तमा इत्यसमात् तेषां क्लेशपरिहाराय तिरुमलतिरुपतिदेवस्थानम् सर्वानपि कार्यक्रमान् अधितन्त्रद्वारा तत्समयं संप्रेषयति। इदं तु कोविड् कारणात् दर्शनाय गन्तुमशक्तानां भक्तानां कृते वरम् इवास्ति। ते गृहे उपविश्यैव देवालये प्रचाल्यमानेषु कार्यक्रमेषु भागं गृहीतुं शक्नुवन्ति।

प्रतिवर्षम् आयोज्यमाणः सप्तगिरीणां सङ्गमोत्सवः ब्रह्मोत्सवः भक्तानां कृते आनन्ददायको भवति। अस्मिन्नवसरे भगवन्तं श्रीवेङ्कटेशं सपरिवारं विविधवाहनेषु विराजमानं द्रष्टुम् अवकाशः लभ्यते। आश्वीजमासे आचर्यमाणः ब्रह्मोत्सवः आचर्यमाणेन नवरात्र्युत्सवेन साकं सम्मिलति इति अस्य वैशिष्ट्यं वर्धयति। श्री वेङ्कटेश्वरो दुःखकारकाणां नाशनं करोति, स्वभक्तान् कुशक्तिभ्यः रक्षति च।

तिरुमलदेवस्थानस्य ध्वजस्तम्भे गरुडध्वजारोहणेन ब्रह्मोत्सवस्य समारम्भो भवति। भगवतः वेङ्कटेश्वरस्य नगरपरिक्रमणात् पूर्वं सर्वसैन्याधिपः विष्वक्सेनः चतुर्णां माडपथाम् अवलोकनाय परिक्रमणं करोति। तदनन्तरं साक्षात् श्रीवेङ्कटेश्वरः विविधरथेषु प्रतिदिनं प्रातः, सायं च परिक्रमणं करोति, भक्तान् अनुगृह्णाति च। भगवतः रथयात्रा नयनानन्दप्रदायिनी वर्तते। अस्मिन्नवसरे भगवान् स्वयं भक्तरक्षणाय दर्शनप्रदानाय च तेषां मध्ये आगच्छन्नस्ति इति दृष्ट्वा भक्तानां नेत्रेभ्यः आनन्दबाष्पाः अनन्ततया प्रवहन्ति।

एवंभूतस्य ब्रह्मोत्सवस्य परिसमाप्तिः पुष्करिण्यां 'स्नपनतिरुमञ्जनम्' इत्यनेन समाप्तिं याति। 'चक्रत्ताल्वार्' इति देवप्रतीकात्मकस्य सुदर्शनचक्रस्य बिम्बं पुष्करिण्यां निमज्ज्यित्वा स्वीकुर्वन्ति। चक्रस्नानानन्तरं भगवद्ध्वजस्य अवरोहणक्रियया ब्रह्मोत्सवस्य परिसमाप्तिर्भवति। अस्मिन् पर्याये तु एकान्ततया ब्रह्मोत्सवाः प्रचलन्ति चेदपि ति.ति.दे. प्रत्येककार्यक्रममपि अतिगभीरतया सज्जीकरोति।

ति.ति.दे. द्वारा नवनीतसेवा इति काचन प्राचीना पद्धतिः पुनः उद्घोषिता वर्तते। अस्य मुख्योद्देशस्तु गोसंरक्षणं, तथा गोमयादीनां उपयोगेन जैवकृषेः प्रोत्साहनं च। ये इच्छन्ति ते एतदर्थं गाः दातुं शक्नुवन्ति। ततः प्राप्तं घृतमेव प्रतिदिनं भगवतः नैवेद्यनिर्माणे उपयुज्यते। एतादृशाः कार्यक्रमाः भक्तानां भगवतः श्री वेङ्कटेश्वरस्य अनुग्रहप्राप्तये सहायकाः भवन्ति।

रथस्थं केशवं दृष्ट्वा इत्यादिवाक्याधारेण इदम् अवगम्यते ब्रह्मोत्सवेत्यादिषु रथारूढं भगवन्तं अवलोक्य पुनर्जन्मनः तरेम इति। अतः भगवद्विषयकोत्सवेषु सर्वत्रापि स्वकीयभक्तिनमनसेवादिकं समर्प्य भक्तभरं ऊढ्वा तृप्ताः भवेम, संसारेण जायमानदुःखेभ्यः त्राताः भवेम।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका

सम्पुटिः-०८ सञ्चिका-०७

# अक्टोबर् २०२१

श्री प्लवनामसंवत्सरस्य भाद्रपदकृष्णदशमी तः
आश्वयुजकृष्णदशमीपर्यन्तम् - १९४१



# सप्तगिरिः



मुखचित्रम् - गरुडवाहने श्रीवेङ्कटेशः, तिरुमल
अन्तिमरक्षापुटः - स्वामिनः चक्रस्नानम्, तिरुमल

गौरवसम्पादकः-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः:
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

**सङ्केतः**

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

**सूचना**
मुद्रितलेखानां विचाराः लेखकानामेव।
एतद्विषये अस्माकं दायित्वं नास्ति।
— *प्रधानसम्पादकः*



# श्री तिरुमलवेङ्कटेश्वरस्वामिनः नित्यार्चने सुप्रभातात् प्रातर्नैवेद्यान्तम्

- डा. सुजाता मुनुकुट्ल
चरवाणी - ८१२३७३२२५६

कलियुगप्रत्यक्षदेवस्य श्रीवेङ्कटेश्वरस्य आनन्दनिलये प्रतिदिनं कवाटोद्घाटनादारभ्य कवाटबन्धपर्यन्तं नैके अर्चनोपचाराः प्रचलन्ति। तथा प्रचलताम् उपचाराणां सङ्ग्रहपरिचयः अत्र क्रियते।

श्री वेङ्कटेश्वरस्वामिनः नित्यार्चने प्रातः सुप्रभातम्, विश्वरूपदर्शनम्, शुद्धिः, तोमालसेवा, आस्थानम्, सहस्रनामार्चनम्, ततः परं प्रातः प्रथमनिवेदनं च प्रातःकालार्चनाङ्गानि भवन्ति। क्रमशः एतेषां विवरणं दीयते।

## सुप्रभातदर्शनम्

ब्राह्ममुहूर्तस्य पूर्वमेव वाद्यवादकाः मृदुमधुररूपेण प्रबोधवाद्यान् वादवन्तः सन्ति। तदा अर्चकस्यामिनः, जिय्यरस्वामिनः, आचार्यपुरुषाः श्रीवैष्णवस्वामिनः, अधिकारिणः, परिजनाः, भट्टाश्च गोविन्दनामसङ्कीर्तनं कुर्वन्तः श्रीस्वामिनः सुवर्णद्वारं प्राप्नुवन्ति। सुवर्णद्वारोद्घाटनं कृत्वा त्रेतायुगे विश्वमित्रमुनिभिः कृत **कौशल्यासुप्रजा राम! पूर्वा सन्ध्या प्रवर्तते। उत्तिष्ठ नरशार्दूल! कर्तव्यं दैवमाह्निकम्** इति सुप्रभातगीतं पठन्तः सर्वे सुवर्णद्वारस्य अन्तः प्रविशन्ति। श्री स्वामिनः सुप्रभातगीतं सर्वेऽपि उच्चैस्स्वरैः पठित्वा ततः परं क्रमेण श्रीवेङ्कटेश्वरस्तोत्रम्, श्रीवेङ्कटेश्वरप्रपत्तिः, श्रीवेङ्कटेशमङ्गलशासनानि च पठन्ति। ततः परं अर्चकाः श्रीस्वामिनः कृते नवनीतं, दुग्धं, शर्करां च निवेदनं कुर्वन्ति। तदनन्तरं अर्चकः तीर्थशठारिं स्वीकृत्य तत्रस्थानां कृतेऽपि तीर्थशठारिं यच्छति। सुवर्णद्वारपुरतः विद्यमानभक्तजनानां मङ्गलशासनानन्तरं सुवर्णद्वारोद्घाटनं भवति। अर्चकः श्रीस्वामिनः कृते कर्पूरनीराजनं ददाति। सुवर्णद्वारे विद्यमानाः भक्तजनाः सर्वेऽपि श्रीस्वामिनः दर्शनं कुर्वन्ति।

## विश्वरूपदर्शनम्

रात्रिपूजावसाने आलयद्वारबन्धनं यदा भवति तदा ब्रह्मादिदेवाः तत्रागत्य श्रीस्वामिनं नमस्कृत्य, सम्प्रार्थ्य, ध्यात्वा अर्चनां च कृत्वा तीर्थं स्वीकृत्य परमानन्द प्राप्नुवन्ति। सन्तुष्टमनस्काः भूत्वा ततः निर्गच्छन्ति। तथा ब्रह्मादिदेवादिभिः कृतार्चनान्तरम् अवशिष्टं तीर्थं यत् वर्तते तत् तीर्थं स्वामिनः सन्निधाने स्थाप्यते। तत् तीर्थमेव ब्रह्मतीर्थमिति नाम्ना श्री जिय्यरस्वामिभ्यः, आचार्यपुरुषेभ्यः श्रीवैष्णवभक्तेभ्यश्च सुप्रभातदर्शनानन्तरं वितीर्यते। तथा वितरणसन्दर्भे दिदृक्षुभिः भक्तैः प्राप्यमाणं दर्शनमेव विश्वरूपदर्शनम् इति कथयन्ति।

## शुद्धिः

श्रीस्वामिनः विश्वरूपदर्शनसमनन्तरम् आरभ्यमाणार्चनविधेः पूर्वाङ्गत्वेन पञ्चविधशुद्धिः विधीयते। सा शुद्धिरेव भूशुद्धिः, द्रव्यशुद्धिः, बेरशुद्धिः, अर्चकस्य आत्मशुद्धिः, भूतशुद्धिश्च इति कथ्यते।

## प्रातःकालराधनम्

श्रीजिय्यरस्वामिनः पुष्पैः पूरितवेणुनिर्मितपात्रं शिरसि धृत्वा भगवद्ध्यानपरायणाः भूत्वा श्रीस्वामिनः सन्निधानं प्रति आनयन्ति। अर्चकः तत्पुष्पसञ्चयं शुद्धीकृत्य स्थापयति। ततः परं श्रीस्वामिनः आराधनं श्रीवैखानसशास्त्रप्रकारेण कुर्वन्ति। तदङ्गत्वेन श्रीभोगश्रीनिवासमूर्तिं रजतमयपीटे संस्थाप्य पुरुषसूक्तेन



उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः।





अभिषेकविधिं निर्वहन्ति। वेदवेत्तारः, श्रीवैष्णवस्वामिनश्च विविधवेदसूक्तानि पठन्ति। तस्मिन् समये अभिषेकविधिः समाप्तः भवति। तदनन्तरं श्रीस्वामिनः कृते वस्त्राभरणपुण्ड्रादीन् समर्प्य श्री स्वामिनः सन्निधानं प्रति आनयन्ति। ततः परं श्रीस्वामिनः सन्निधाने विद्यमानानां श्रीसीतारामनृसिंहगोपालमत्स्यादीनां ग्राममूर्तीनां अभिषेकमपि कृत्वा यथास्थाने स्थापयन्ति। श्रीवैष्णवस्वामिनः, जीय्यरस्वामिनश्च ६० पाशुरदिव्यप्रबन्धगानं कुर्वन्ति। ततः परं तोमालसेवा आरभते।

## तोमालसेवा

श्रीजीय्यरस्वामिनः, श्रीवैष्णवस्वामिनः, आचार्यपुरुषाः, अध्यापकाश्च श्रीआण्डाल् तिरुप्पावै ३० पाशुरदिव्यप्रबन्धेषु २८ पाशुराणि भक्त्या श्रद्धया च सुमधुरस्वरेण गानं कुर्वन्तः तिष्ठन्ति। तदा सर्वेषां मूर्तीनां पुष्पमालैः अलङ्कारं कुर्वन्ति अर्चकाः। तत्र प्रधानतया धृवबेरस्य अर्थात् मूलविराजः एते पुष्पालङ्काराः भवन्ति। अर्चकाः श्रीस्वामिनः कृते कण्ठमालाः, हृदयपर्यन्तमालाः, नाभिपर्यन्तमालाः, कटिपर्यन्तमालाः, जानुपर्यन्तमालाः, पादपर्यन्तमालाः, कठारिमालाः, शङ्खचक्रमालाः, शिरोमालाः, शिखरमालाः, बहुविधपुष्पमालाः समर्पयन्ति। सर्वेऽपि भक्तजनाः आनन्दपरवशाः भूत्वा तं मूलविराजं पश्यन्ति। ततः परं नक्षत्रनीराजनं, कर्पूरनीराजनं च प्रचलति।

## श्री स्वामिनः आस्थानम्

तोमालसेवात्तरोपचारः स्वामिनः इदम् आस्थानम्। अत्र आस्थानशब्देन सभा ग्राह्या। सभायां सर्वे अर्चकाः, अधिकारिणः, परिमितसङ्ख्याकाः भक्ताश्च स्थित्वा स्वामिने वर्तमानदिनस्य तिथिवारनक्षत्रयोगकरणादिपञ्चाङ्गांशान् श्रावयन्ति। ततः परं पूर्वदिनस्य आयव्ययविवरणं कुर्वन्ति। आस्थानान्ते गुडमिश्रिततिलचूर्णं निवेद्य नीराजनं यच्छन्ति। एतस्य एव आस्थानस्य केलुवु इति आन्ध्रभाषापदेन लोकप्रसिद्धिः वर्तते।

## सहस्रनामार्चना

अर्चकाः श्रीस्वामिनः पादपद्मौ तुलसीदलैः अर्चयन्तः श्रीवेङ्कटेश्वरसहस्रनामपठनं कुर्वन्ति। श्रीदेवीभूदेव्योः च पादपद्मानाम् अपि ''ओं श्रियै नमः'' इति पूजां कुर्वन्ति। श्रीस्वामिनः सहस्रनामर्चनां भक्तजनाः अत्यन्तानन्दपरवशाः भूत्वा वीक्षन्ते। ततः परं नक्षत्रनीराजनं भवति। दर्शनसेवानन्तरं श्रीस्वामिनः कृते भोज्यासनम्, ततः परं लघुशुद्धिश्च। अयमेवविधिः प्रातरर्चनमिति प्रसिद्धम्।

## प्रातर्निवेदनम्

अर्चनानन्तरं दिवसः प्रातःकालिकं प्रथमं निवेदनं समर्पयन्ति। श्रीस्वामिनः कृते निवेदनीयाः पदार्थाः आनीय स्वामिनः कृते निवेदयन्ति। ताम्बूलमपि यच्छन्ति। परिचारकः आस्थानमण्डपे सुवर्णद्वारस्य दक्षिणभागे विद्यमानघण्टाद्वयमध्यभागे उपविश्य घण्टानादं करोति। अर्चकानां प्रसादभागं स्वामिनः अनुमतिं स्वीकृत्य ते स्वीकुर्वन्ति।





# भगवतः श्रीनिवासस्य ब्रह्मोत्सववैशिष्ट्यम्

- डा.डी.दयानाथः
चरवाणी - ९४१९२९५८४१

भगवतः देवदेवस्य श्रियःपते श्रीनिवासस्य ब्रह्मोत्सवः वृषाद्रिनाथस्य प्रीत्यै प्रतिवत्सरमस्माभिरनुष्ठीयते। प्रथममस्माभिः ज्ञातव्यं यत् कोऽयं उत्सवशब्दार्थः इति। उत्सवो नाम 'नियताह्लादजनकव्यापारः' इति अभिज्ञाः कथयन्ति। नियतः सर्वदा, आह्लादः आनन्दः, जनकः अत्पादकः, नियताह्लादजनकक्रियाविशेषः उत्सवशब्देन उच्यते। अस्ति हि नियताह्लादजनकत्वव्यापारविशेषाः क्रियाविशेषाः वा बहवः यदनुष्ठाय वयं जीवने सुखमनुभवामः। यथा सङ्क्रान्त्युत्सवः, होलिकोत्सवः, दीपावल्युत्सवः, स्वकीयजन्मोत्सवः, पुत्रजननोत्सवः इत्यादिविविधाः व्यापाराः उत्सवशब्देनाभिधातुं शक्यन्ते। इमे सर्वे उत्सवाः खलु सांसारिकजीवनयात्रायाम् अस्मानानन्दयन्ति।

ननु आभारतं श्रीवैष्णवमन्दिरे भगवतः विविधोत्सवाः वैखानसपाञ्चारात्रादितत्तदागमतन्त्रोक्तदिशा परिपाल्यन्ते। तच्च पवित्रोत्सवः, अध्ययनोत्सवः, डोलोत्सवः, कल्याणोत्सवः इत्यादिरीत्याऽवगन्तव्यम्। सर्वत्र मन्दिरेऽसौ ब्रह्मोत्सवः प्राधान्यं भजते इति निर्विवादः। यथा हि सर्वेषामुत्सवानाम् अनुष्ठानकालः निर्धारितः तथैवास्य ब्रह्मोत्सवस्यापि कालो निर्धारितः। क्वचिदस्ति तस्य कालः चैत्रे, क्वचिच्च वैशाखे, अपरत्र श्रावणे इति निर्धारितवन्तः आगमसम्प्रदायादिविज्ञो महर्षयः आचार्याः। तत्र श्रीनिवासस्य ब्रह्मोत्सवः परिपाल्यते अस्माभिरिदानीमिति भक्ताः जानन्ति।

ब्रह्मोत्सवः इत्यस्य अर्थद्वयम् अस्माभिः प्राधान्येन ज्ञातव्यम्। ब्रह्म-उत्सवः इति पदद्वयमस्ति अत्र। ब्रह्मण उत्सवः इति ब्रह्मोत्सवः। ब्रह्म इत्युक्ते अत्र ज्ञानानन्दैकस्वरूपः श्रियः पतिः सर्वेश्वरो वृषाद्रिनाथो भगवान् श्रीनिवास एवेति निश्चयः। तस्य ब्रह्मणः उत्सवः ब्रह्मोत्सवः इति एकोऽर्थः। अथ ब्रह्मणा श्रीनिवासतृप्तये तदनुज्ञया कृतः उत्सवः ब्रह्मोत्सवः इति अपरोऽप्यर्थः। अपि च ब्रह्म इत्युक्ते वृहद् इत्यपि अर्थः गम्यते। अतः एव उत्सवः महोत्सवः इत्यपि व्यवह्रियते


अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः।

आनमग्रन्थेषु। एतत्सर्वं वराहपुराणादौ सुष्ठु निरूपितम्। श्रीवराहपुराणे श्रूयते अस्य उत्सवस्य अपरिमितं माहात्म्यम्।

पुरा खलु दशरथाय वरदानात्परं श्रीनिवासः चतुर्मुखब्रह्माणमाहूय अपृच्छत्। हे ब्रह्मन्, निष्क्रान्ताः सर्वे, समयस्तु अतिक्रान्तः, सर्वे देवगाणाः, राजानः, इतरे च स्वस्थानं गताः। भवान् किमर्थमत्र स्थितः? किमपेक्षते वदतु? सद्यः एव तुभ्यं वाञ्छितं फलं प्रयच्छामीति भगवता उक्ते सति ब्रह्मा इत्थं प्रार्थयामास -

**इति पृष्ट पुनः प्राह ..... स्थातव्यं भवता हरे।**

(श्रीवराहमाहुपुराणम् अध्यायः ५०)

तदित्थं ब्रह्मणा प्रार्थितः भगवान् श्रीनिवासः अस्मिन् स्थले उषितुम् अङ्गीचकार। उपर्युक्तश्लोकमाध्यमेन कलिप्रभावात् जनानां वर्तमानकालस्थितिं सम्यक् ज्ञातुं शक्यते। अस्मिन् कलौ युगे जनाः उदरपूराणार्थाः सांसारिकसुखानुभवैकरताः भवन्ति। प्रायशः जनानां धर्माधर्मज्ञानं न भवति। धर्माधर्मज्ञानस्य मूलं वेद एव। अतः एतेन इदमपि प्रपञ्चितमभवद्यत् वेदाध्ययनपरायणानां वेदार्थचिन्तने तत्पराणां विषाषाम् अपि च वेदोदितकर्मानुष्ठानतत्पराणां च न्यूनता भवतीति। यतः वेद एवास्माकं धर्मे परमं प्रमाणम्। तदुक्तं मनुस्मृतौ - धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः (मनु.२.१३) इति। प्रायशः मनुष्याः दुर्बलाः, रोगिणः, काममोहिताः च भवन्ति। पापिनामेवात्र जगतीतले जन्म भवति। पशुवत् जीवनं यापयन्ति, स्वस्य श्रेयस्त्वं किमिति न जानन्ति। क्षुत्तृष्णादिपीडिताः सन्तः त्वां देवदेवं भगवन्तं न जानन्ति अथवा अज्ञानवशात् ज्ञातुमेव नेच्छन्ति। एते मनुष्याः यदि त्वया उपेक्षिताः तर्हि रौरवादिनरकाः अपर्याप्ता भवन्ति। अतः एतेषाम् अनुग्रहार्थं हे भगवन् श्रीनिवास, त्वया अत्र स्थातव्यमिति ब्रह्मा प्रार्थयामास। तदित्थं प्रार्थितो भगवान् वृषगिरौ स्थास्यामीति प्रतिश्रुतिं दत्तवान् - 'स्थास्याम्यत्रैव सर्वेषां प्रत्यक्षः सर्वकामदः' इति यदिदं भक्तैः उच्यते, कलियुगे प्रत्यक्षदेवः सर्वकामनाप्रदः श्रीनिवासो भवतीति तदत्र 'प्रत्यक्षः, सर्वकामदः' इति पदाभ्यां ज्ञातव्यम्।

**पुष्करिणी -** अपि च तत्रत्यः सरोवरः स्वामिपुष्करिणीति उच्यते तदपि अन्वर्थनाम एव। तदुक्तं भगवता - 'तीर्थानां स्वामिभूतत्वात् उच्यतेऽन्वर्थनामतः' इति। गङ्गादिसकलपुण्यनदीतीर्थानामुत्पत्तिस्थानत्वेन पुष्करिणीं वदति। इत्थम्भूतस्य देवदेवस्य जगत्पतेः महोत्सवः समनुष्ठितः ब्रह्मणा देवगणेन च।

ब्रह्मा, वैखानसादिमुनिगणाः, देवगणाः, सर्वे ध्वजारोहणपूर्वकं सूर्यस्य कन्याराशौ प्रवेशे (पुरट्टासि इति तमिलभाषायाम्, आश्वयुजम् इति तेलुगुभाषायां व्यवहारः) ध्वजारोहणपूर्वकम् उत्सवः समारभ्यते। पुरा देशस्य अङ्गवङ्गकलिङ्गादिदेशात् काश्मीरप्रदेशात् चोलपाण्डियनाडु इति ख्यातात् दक्षिणदेशात् कोसलदेशादौ च ये निवसन्ति ते सर्वे उत्सवेऽस्मिन् भागं ग्रहीतुं सन्नद्धाः समागच्छन्ति स्म। सर्वे मार्गे गोविन्द इति नाम स्मरन्तः भगवद्भक्तिभावपूरिताः नन्दन्ति स्म। ननु ऊह्यतां तेषां भक्तानां दशा। भगवतः दर्शनाय चिरप्रतीक्षया मनःश्रान्तिः भगवतः नामोच्चारणभरिता तपः श्रान्तिः, एतत्सर्वम् उत्सवे भूमिनीलासमेतश्रीनिवासस्य दर्शनक्षणे एव अपसारिता भवति। केवलम् अस्माकं नेत्रे भक्तिभावेन नयनोद्भवाश्रुबिन्दवः एव अवशिष्टा भवन्तीति किमु वक्तव्यम्। योऽयं श्रीहरिः योगिनां सहस्राधिकयुगैः कृततपसामपि अदृश्यः, अत्र भक्तानुग्रहकामनया प्रत्यक्षः श्रीनिवासरूपेण तिष्ठतीति खलु महदाश्चर्यम्। वस्तुतः येयं कृपा श्रीनिवासस्य वर्तते सा एव कृपा मूर्तिरूपं स्वीकृत्य सप्तगिरिरूपा अभवदिति वदन्ति कवयः मनीषिणः। तदुक्तं स्वामिवेदान्तदेशिकेन महाकविवेङ्कटनाथापरनामधेयेन -

**प्रपद्ये तं गिरिं प्रायः ...... यन्मूर्त्या शर्करायितम्।।** इति।

(दयाशतकम्)

श्रीनिवासस्य दया भक्तेषु नदीव प्रवहति। यथा हि द्रवीभूतः इक्षुरसः कालान्तरे संस्कारेण वा शर्करारूपेण गुडरूपेण वा दृढः भवति तद्वत् श्रीनिवासस्य अनुक्रम्पाप्रवाहतः अपि वेङ्कटाद्रिरूपेण दृढीभूतः इत्यनुभवन्ति पूर्वाचार्याः। भगवतः उत्सवदिनं सकलपापनाशकं भवति। जनाः उत्सवदिने भगवतः दर्शनेनापि स्वकीयपापराशिं निवारयितुं शक्नुवन्ति। तदुक्तम् -

श्रीनिवासोत्सवदिनं ..... चक्रुर्दानान्यनेकशः॥

(वराहपुराणम् ५०,१३)

उत्सवेऽस्मिन् भागं ग्रहीतुं आगतानां सेवार्थिनां कृते देवस्थानेन, विविधसेवासंस्थया च पानीयभोजनादिव्यवस्थाः क्रियन्ते। तच्चावलोक्यते अस्माभिः सर्वत्र तिरुमलतिरुपतिक्षेत्रे। अपि च भक्तजनाः देवस्य सालङ्कारं विविधवाहने प्रस्थानादौ पुरतः नृत्यवाद्यगीतादिसहिताः गच्छन्ति। नूनमिदं न अर्वाचीनम्। पुराणकालादेवायं सम्प्रदायः प्रवर्तते इति जानीमः। तद्यथा -

उत्सवे दर्शनं पुण्यं ...... विविधान्नगृहाणि च॥ इति।

(वराहपुराणम् ५०.४३-४४)

नृत्यन्तो .......सेवितुं सर्वे वेङ्कटाह्वयभूधरम्॥ इति।

(वराहपुराणम् ५०.४६)

उत्सवे प्रत्येकं दिनं तुरग-गज-शेष-गरुडादिविविधिवाहनारूढः श्रीनिवासः भक्ताननुगृह्णाति। पुरापि इत्थमेवाभवदिति विज्ञायते।

उच्चैः श्रवसमाश्वं च गजमैरावतं तथा।

अनन्तं नागराजं.....रथ्यायामटन् भूम्या श्रियान्वितः। इति॥

(वराहपुराणम् ५१.५.७)

ब्रह्मोत्सवे दर्शफलम् अपि स्वयं भगवान् वक्ति। अस्मिन् कन्याराशिं गते रवौ (आश्वयुजमिति) ब्रह्मणा संशिते उत्सवेऽस्मिन् ये आयान्ति ते संसारे सर्वसुखं प्राप्य अन्ते ब्रह्मलोकमवाप्नुवन्ति। अपि ये ब्रह्मोत्सवार्थम् एकमपि वा पदम् अग्रे गच्छन्ति तेऽपि ईदृशं फलं प्राप्नुवन्ति। अपि च उत्सवोऽयं ब्रह्मणा कल्पितमिति स्वयं भगवान् वक्ति 'सेवन्ते मामस्मिन्नुत्सवे ब्रह्मकल्पिते' इति। अनेन श्लोकेनेदं ज्ञातं यदयं ब्रह्मोत्सवः प्राचीनकालादेवाचार्यैः प्रचलितः इति। उत्सवेऽस्मिन् अन्नदानं महते श्रेयसे भवति। यः मनुष्यः उत्सवेऽस्मिन् सेवार्थिनां भक्तानाम् कृते अन्नदानं करोति तं पुरुषं सप्तवंशपर्यन्तं बहुविधान्नेन अनुगृह्णाति श्रीनिवासः। अनेन सप्तकुलपर्यन्तं बह्वन्नं प्राप्नोतीति कथनेनैव तस्य वंशवृद्धिरपि भवतीत्यत्र नास्ति शङ्कालेशः। अत एव तैत्तिरीयोपनिषदि अन्नस्य ब्रह्मत्वं प्रतिपादितम्। "अन्नं ब्रह्मेति व्यजानात्" इति (तै.उप.भृगुवल्ली २.१)

सहस्राधिकवर्षपर्यन्तं कृतेन तपसा ज्ञानेन नानाजन्मफलसिद्धिपर्यन्तं वा ये तं भगवन्तं साक्षात् कुर्वन्ति मुक्तिं च प्राप्नुवन्ति, सः देवदेवः जगत्पतिः जनार्दनः श्रीनिवासः ब्रह्मोत्सवदर्शनार्थिनां विविधदानादिना चित्तशुद्धानां करस्थां मुक्तिं प्रददाति। तदेवोक्तं भगवता - 'तेषां मुक्तिः करस्था हि ज्ञानसाध्या हि दुर्लभा।' इति (वराहपुराणम् ५१.३७)

पुण्यक्षेत्रेऽस्मिन् वसतामपि मुक्तिं प्रददाति। तच्च "पुण्यक्षेत्रमिदं भूमौ स्थातव्यं हि सदाऽत्र तु" इति वराहपुराणवचनं मनसि निधायैव महाकविवेङ्कटानाथः श्रीवेदान्तदेशिकः श्रीनिवासकृपाविषये अवदत्।

वृषगिरिसविधेषु ....... माधवं सावधाना॥ इति।

(दयाशतकम् ३७)

वृषाद्रिक्षेत्रे किमपि व्याजेनापि वसताम् अज्ञानदोषेण कृतापराधस्यापि श्रीनिवासस्य दयादेवी अन्ते माधवं श्रीनिवासं संस्मारयन्ती मुक्तिपदवीं दास्यतीति खलु श्रीनिवासदयावैभवम्।

**वराहतीर्थम्** - वराहतीर्थस्य महिमा पुराणस्मृतिग्रन्थेषु विस्तररूपेण उपलभ्यते। ब्रह्मपुराणे नारदः क्रमशः सर्वतीर्थानां महत्त्वं कथितुं ब्रह्माणं प्रार्थितवान्। तदा ब्रह्मा अवदत् -

तीर्थानां च पृथग्भावं .... श्रुतिवाक्यानि यानि च॥ इति।

(ब्रह्ममाहापुराणे गौतीमाहात्म्ये ९.३.४)

तत्रैव त्र्यम्बकतीर्थकथनानन्तरं वराहतीर्थमाहात्म्यं वदति ब्रह्मा। उच्यते - 'वाराहमपरं तीर्थं त्रिषु लोकेषु विश्रुतम्' इति। वराहतीर्थमिदं साक्षाद्गङ्गाया तीर्थमिति पुराणवचनम्। स वराहो पुरा निर्यज्ञां महीं रक्षितुं कृतावतारः राक्षासान् हत्वा रसातलाद्यज्ञं समानीय लोकरक्षणमकरोत्। तादृशस्य यज्ञसमुद्धरणकर्ता वेदस्वरूपी श्रीवराहः तिरुमलक्षेत्रेऽपि निवसतीति जानीमः।

अतः वयं सर्वे श्रुतिपुराणादिसमुपबृंहितस्य देवदेवस्य भगवतः श्रीनिवासस्य ब्रह्मोत्सवे भागं गृहीत्वा गरुड-हनुमन्त-विमान-शेष-हंस-सिंह-कल्पवृक्ष-तुरग-गज-चन्द्रसूर्यप्रभादि - वाहनरूढस्य श्रीवेङ्कटेशस्य मुहुर्मुहुः दर्शनं कृत्वा इह लोके धर्मार्थकामान् सम्प्राप्य अन्ते भगवतः सायुज्यरूपं मोक्षं च प्राप्नुमः। तदीयदर्शनाय अस्मान् अनुगृह्णात्विति भगवन्तं श्रीनिवासं सम्प्रार्थयामः।





तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवाः
२०२१ अक्टोबर् ०७ तः १५ पर्यन्तम्



०८-१०-२०२१
भृगुवासरः
रात्रौ -
हंसवाहनम्



०९-१०-२०२१
मन्दवासरः
प्रातः -
सिंहवाहनम्



०९-१०-२०२१ मन्दवासरः
रात्रौ - मौक्तिकमण्टपम्



१०-१०-२०२१ भानुवासरः
प्रातः -कल्पवृक्षवाहनम्



तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवाः
२०२१ अक्टोबर् ०७ तः १५ पर्यन्तम्

११-१०-२०२१
इन्दुवासरः
प्रातः -
आन्दोलिकायां
मोहिन्यवतारोत्सवः



१०-१०-२०२१
भानुवासरः
रात्रौ - सर्वभूपालवाहनम्





तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवाः
२०२१ अक्टोबर् ०७ तः १५ पर्यन्तम्



१२-१०-२०२१
भौमवासरः
प्रातः -
हनुमद्वाहनम्



१२-१०-२०२१
भौमवासरः
रात्रौ -
गजवाहनम्



तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवाः
२०२१ अक्टोबर् ०७ तः १५ पर्यन्तम्



१३-१०-२०२१
सौम्यवासरः
प्रातः -
सूर्यप्रभवाहनम्

१३-१०-२०२१
सौम्यवासरः
रात्रौ -
चन्द्रप्रभवाहनम्






# सुदर्शनवैभवम्

-डा. केशवप्रपन्नपाण्डेयः
चरवाणी - ८१२४९७०३१६

**यदायत्तं जगच्चक्रं च ....चक्ररूपस्य चक्रिणः।।**

तत्र सत्यकामसत्यसङ्कल्पादिना विभूषितो भगवान् नारायणः स्वसङ्कल्पकलाकलापैः षोडशभिर्दिव्यैरायुधैः क्रियमाणैर्विविधैः कैङ्कर्यैः जुष्टस्तान् स्वकीयनिर्हेतुक्या करुणया सन्ततमनुगृह्णन् स्वनित्यधाम्नि श्रीमति वैकुण्टे एव नित्यसूरित्वेन निजचरणारविन्दाश्रयिणः कुरुते। तादृशेषु भगवतो नारायणस्य मुख्यतमेषु षोडषायुधेषु स्फुरत्सहस्रारस्य भास्करकोटितुल्यस्य सदा भागवतरक्षणदीक्षस्य चक्ररूपिणो भगवतः सुदर्शनस्य स्थानमत्युत्कृष्टम्। साधूनां परित्राणाय दुष्टानां विनाशाय च भगवता क्रियमाणेषु व्यापारेषु भगवतः सुदर्शनस्य महद्योगदानं भवति। सदा भगद्दक्षिणकराङ्गुल्यैकनिवासो भगवान् सुदर्शनः भगवतो नारायणस्य मनोभावं सम्यक्परिज्ञाय भगवद्भागवतशत्रूणां निबर्हणे प्रवर्तते। हेतिराजस्य सुदर्शनस्य वैभवान्यनेकेषु पुराणेतिहाससंहितादिषु वर्णितानि सन्ति। तथैव श्रीसंप्रदायेऽपि वेदान्तदेशिककूरनारायणयतिवरप्रभृतिभिः भगवतः सुदर्शनस्योपरि ''सुदर्शनाष्टकम्'' ''सुदर्शनशतकम्'' ''श्रीसुदर्शनाष्टोत्तरशतनामस्तोत्रम्'' इत्यादीन्यनेकानि दिव्यस्तोत्राणि विरचितानि येषां नियतरूपेणानुसन्धानमद्यापि दुःखशमनपूर्वकभूतिं कामयमानानां भक्तानां गेहेषु भवत्येव।

तत्र चक्रराजस्य भगवद्भक्तगणरक्षणैकदीक्षत्वं तदनितरासाधरणवैभवञ्च श्रीमद्भागवतपुराणान्तर्गत-भगवद्भक्तवरेण्यस्याम्बरीषमहाराजस्य उपाख्यानेनास्माभिः ज्ञायते। कदाचिद्राज्ञा अम्बरीषेण सादरं द्वादशीपारणार्थं प्रार्थितो दुर्वासमहर्षिः नद्यां स्नानादिकं विधाय तदनु पारणार्थं पुनरागच्छेयमित्युक्त्वा प्रस्थितस्य महर्षेः द्वादशीपारणसमाप्तिवेलायामपि तदनुपस्थित्या घोरधर्मसङ्कटमापन्नो राजर्षिः अम्बरीषः, तदनु शास्त्रज्ञैः विद्वद्भिस्सह द्वादशीपारणार्थमुपायान्तरं समालोच्य अन्ते तद्व्रतं पूरयितुकामः केवलं जलग्रहणमात्रेणैव स्वव्रतं पूरयन् तत्प्रत्यागमनार्थं सश्रद्धं प्रतीक्षमाणस्तस्थौ। यथा श्रीमद्भागवते-
**मूहूर्तार्धावशिष्टायाम् द्वादश्यां .... द्विजागमनमेव सः।।** इति।

किन्तु स्वीयतपोबलेन सद्यस्तत्कृतजलपानं परिज्ञाय दुर्वासमहर्षिः तदनुष्ठितं कर्म स्वीयानादरत्वेन मन्यमानः भगवदपचारविषये किमपि कृत्याकृत्यमचिन्तयन् क्रोधस्य पारङ्गतस्तं भगवद्भक्तमम्बरीषं हन्तुमनाः तत्केशेनैकां घोरां कृत्यामुत्पाद्य हन्तुं प्रेषयाञ्चक्रे। परं परमकारुणिकेन भक्तजनवत्सलेन भागवतापचारमसहमानेन भगवता नारायणेन तद्भक्तरक्षणार्थमहर्निशं तत्रैव राज्ञः सन्निधौ नियुक्तो भगवान् सुदर्शनः तं भक्तशिरोमणिम् अम्बरीषं तस्याः रक्षितुकामः सद्यस्तत्र प्रकटीभूय हन्तुमभ्यागतां कृत्यां तां सपदि स्वतेजोबलेन भस्मसाच्चकार। ततस्तं कृतभागवतापचारं दुर्वासमहर्षिणमपि व्यापादयितुमीहाम्बभूव। यथा श्रीमद्भागवते -
**प्राग्दिष्टं भृत्यरक्षायां ......क्रुद्धाहिमिव पावकः।।**
तेन च नितरां भीतः तत्तेजसा भृशं पीडितः स महर्षिः सदा भगवद्भक्तरक्षणपरायणात् तस्मादमिततेजोमयाच्चक्रराजादात्मानं रक्षितुं धावं धावं त्रिषु लोकेषु सञ्चरन्नात्मानं रक्षितुं चतुर्मुखादिदेवान् प्रार्थयति स्म, परं कुत्रापि शरणमलभमानः स महर्षिरन्ततो गत्वा भगवद्विष्णोराज्ञया तमेव भगवद्भक्तम् अम्बरीषं शरणङ्गतः। तदनु रक्षितश्च अम्बरीषकृतसुदर्शनविषयकविनम्रस्तुत्या तस्माच्चक्रराजप्रकोपात्। भगवान् सुदर्शनोऽपि तत्प्रार्थनया महर्षिणं तमभयं दत्वा तत्स्तत्रैवान्तर्दधे। यथा तत्रैव -
**स त्वं जगत्त्राण! ..... प्रदहद् राजयाञ्चयाञ्चया।।** इति
तत्रस्थानेनाख्यानेनेदं स्पष्टं ज्ञायते यत् भगवद्भक्तापचारिणो न कदापि सहते भगवान् सुदर्शनः, तथैवानेकेषु स्थलेषु चक्रराजस्य प्रभावो वर्णितो दृश्यते। तथैव अपरः कश्चन दिव्यप्रभावः तत्रैव श्रीमद्भागवते बाणासुरसङ्ग्रामे श्रूयते



हेतिराजस्य। तत्र दम्भमानमदान्वितस्य सहस्रबाहोः बाणासुरस्यैकैकस्यापि बाहोश्छेदनपूर्वकं तदहङ्कारं भस्मीकुरुते भगवान् कृष्णः, तदात्वे आशुतोषः शिवस्तत्र प्रकटीभूय स्वपुत्रकल्पं बाणासुरं रक्षितुकामो माहेश्वरैरस्त्रैः स्वभूतपिशचगणादिभिश्च घोरे युद्धे प्रववृते।

परं वैष्णवास्त्रैः पराजितासु सर्वास्वपि माहेश्वरशक्तिषु अन्तिमे भगवदिङ्गितपराधीनः चक्रराजस्तत्र उपस्थाय स्वीयामितप्रभावेण उभयोरपि शिवबाणासुरयोर्निग्रहश्चकार इत्यनेन हेतिराजस्यामितप्रभावो दरीदृश्यते। तथैव कदाचित् श्रीरङ्गे भगवद्रङ्गनाथोत्सवादिसमयघटितविघ्नसङ्घातानां यतिवरश्रीकूरनारायणस्वामिकृतप्रार्थनया भगवच्चक्रराजकृततच्छमनम्, रङ्गेशविज्ञप्ति-करस्यामयस्य तेनैव निवृत्तिश्च। उभेऽपि घटने प्रसिद्धिं भजतस्तत्रत्येष्वितिहासेषु।

तत्र भगवद्रङ्गनाथस्य लोकोत्तरमहिमानमसहमानैः कतिपयैः दुष्टबुद्धिभिर्भगवद्भागवतद्वेषिभिः कृतैरभिचारमन्त्रैः कदाचिच्छ्रीरङ्गस्थभगवन्मन्दिरस्य प्राङ्गणं रक्तपलकीकसाद्यपवित्रवस्तुपातनैः दूषितं, येन च भृशं दुःखिताः तत्रस्थाः कैङ्कर्यपराः वैष्णवाः तदात्वे प्रवर्तमानं भगवतो रङ्गनाथस्योत्सवं सद्यः ससम्भ्रमं स्थगयामासुः। एवं कालान्तरेष्वपि पौनःपुन्येन तत्कृतविघ्नैरसकृद्बाधितान् भगवद्दिव्योत्सवान् वीक्ष्य अत्यन्तं खिन्नान्तःकरणाः भगवद्भक्ताः यथा पूर्वं तदुत्सवान् सञ्चालयितुकामाः तन्नगरवासिनं वैष्णवाग्रेसरं यतिवरं कूरनारायणमुपजग्मुः, प्रार्थयामासुश्च उन्मूलयितुमेतान् विघ्नान् समूलम्। सोऽपि यतिवरो वृत्तान्तमेतं विज्ञाय दुःखितमनाः भगवद्विषये तैरसकृतदुत्पादितविघ्नान् शाश्वततयोत्पाटयितुकामः भगवच्चरणनलिनयुगं ध्यात्वा सर्वविधदुःखहन्तारं भगवन्तं सुदर्शनं सन्तोषयितुं बीजमन्त्रपूरितं ''सुदर्शनशतकम्'' इति नाम्ना दिव्यं स्तोत्रमेकं विरचयामास, यत्तु अद्यापि वैष्णवजगति चक्रराजसुदर्शनविषयकेषु विद्यमानेषु स्तोत्रेषु प्राथम्यमावहति।

तत्र स्तोत्रमिदं षट्सु विभागेषु विभक्तम् भवति। प्रथमन्तावत् ज्वालावर्णनं ततो नेमिवर्णनम्, अरवर्णनम्, नभिवर्णनम्, अक्षवर्णनम्, पुरुषवर्णनम्, इत्यादिभिः षड्वर्णनैः भगवतश्चक्रराजस्य षड् दिव्याङ्गानि बहुभिः प्रकारैः तद्वैभवानि च वर्णितानि दृश्यन्ते महता वैभवेन।

तत्र स्तोत्रस्यास्य रचनाया उद्देश्यं ज्ञायते च तत्रैव श्रीकूरनारायणजीयर्स्वामिविषयकेन प्रथमपद्येन। यथा -

**रङ्गेशविज्ञप्तिकरामयस्य ....कूरनारायणनामकं मुनिम्॥**

इत्यनेन द्राविड्यां ''अरैयर्'' इत्याख्यस्य रङ्गेशविज्ञप्तिकरस्य आमयस्य सहैव भगवन्मन्दिरे वैष्णवद्वेषिभिः प्रवर्तितविघ्नानां निवृत्तये च कूरनारायणनामको मुनिः सुदर्शनशतकं चकार इति प्रकृतपद्येन पूर्वाचार्याणां कथनेन च ज्ञायते। सुदर्शनपद्यस्थवर्णने विद्यमानेन पद्यान्तरेणापीदं पूर्वोक्तं सिद्धं भवति यद्विपदि विद्यमानान् वः भगवान् सुदर्शनः त्रायताम् इति। यथा-

**उत्पातालातकल्पा ......वोऽराणि सौदर्शनानि॥**

इत्यत्र चरमेन पादेन स्पष्टं पादेन स्पष्टं कूरनारायणमुनिः प्रार्थयति यद् अन्तिमायां विपदि सौदर्शनानि अराणि वः त्रायन्ताम् इति। तथैव अनेकत्र व्यपगतविपदं सम्पदं चक्रराजः वः निर्विघ्नं प्रसूताम् इत्येतादृशाः प्रार्थनाः कृता दृश्यन्ते स्तोत्रेऽस्मिन्। अन्ततो हेतिराजस्य निरवग्रहेणानुग्रहेण विघ्नशमनपूर्वकं सर्वविधशर्माणि सर्वेऽपि भगवद्भक्ताः प्राप्यन्तामिति अन्तिमेन पद्येन भगवतः सुदर्शनस्य भगवत्परत्वं वैभवं प्रख्याप्य मङ्गलकामनया दिव्यं स्तोत्रमिदं पूरयति।यथा-

**यस्मिन् विन्यस्य ..... पुरुषो दिव्यहेत्यक्षवर्ती॥**

अत्र ''यस्मिन् विन्यस्य भारं विजयिनि'' इत्यनेन लक्ष्मीनारायणख्यस्य मिथुनस्य निरतिशतवैभवोपेतस्य महापराक्रमिणः चक्रराजस्योपरि विद्यमानातिशयविस्रब्धः प्रदर्शितः येन च दिव्यदम्पत्योः जगतां जङ्गमस्थावराणां विषये निश्शङ्कतया नित्यमनुभवः साध्य इति कथनेन हेतिराजस्य प्रभावः कियान् वर्तत इति ज्ञायते।

एवमन्ततो गत्वा स्तोत्रेणानेन परमप्रसन्नः भगवान् सुदर्शनः तत्रस्थं रङ्गेशविज्ञप्तिकरं तद्व्याधिशमनेन तमनुगृह्य ततो रङ्गमन्दिरमपि दुष्टैःकृताभिचारमन्त्रजनितविघ्नैः संरक्ष्य शाश्वतिकेनानुग्रहेणानुजग्राह। अन्ते स्तोत्रस्यास्य पद्येनैकेन फलश्रुतिरुक्ता, ''यद्यो वा भक्तः श्रद्धया स्तोत्रमिदं पठेत्स परमां चक्रसायुज्यलक्ष्मीं भजेत'' इत्यनेन मङ्गलाशासनेन दिव्यस्तोत्रमिदं परिसमाप्तिमेति।

**पद्यानां तत्त्वविद्याद्युमणि... चक्रसायुज्यलक्ष्मीम्॥** इति एवं षोडशायुधस्तोत्रम्, सुदर्शनकवचम्, सुदर्शननामावलिः, सुदर्शनस्तोत्रम्, सुदर्शनगद्यम् इत्यादिषु दिव्यस्तोत्रेषु पूर्वाचार्याः तन्महिमानमूचुः येषामनुसन्धानेन सर्वविधसिद्धिः तदनुग्रहश्च भवितेत्यत्र नैव संशीतिः।







# ब्रह्मोत्सवे वाहनविशेषाः

- श्री यश्वन्त दीक्षितुलु
चरवाणी - ९४९४५३८५०९



**कमप्यनवधिं वन्दे करुणावरुणालयम्।
वृषशैलतटस्थानां स्वयं व्यक्तिमुपागतम्।।**

भगवतः अखिलाण्डकोटिब्रह्माण्डनायकस्य वेङ्कटाद्रौ विराजमानस्य श्रीनिवासस्य नैकेषूत्सवेषु ब्रह्मोत्सवः सर्वोत्कृष्टतमत्वेनाचरन्तीति विपश्चिदपश्चिमानां निश्चप्रचम्। अस्मिन्नुत्सवे वाहनान्येव ब्रह्मोत्सवशोभां दशसु दिक्षु नितान्तं प्रसारयन्तीति नास्ति सन्देहलेशः। प्रथमदिने ध्वजरोहणात् अनन्तरं बृहच्छेषवाहनदारभ्य अष्टमदिने अश्ववाहनं यावत् वाहनान्यधिरोह्य भगवान्वेङ्कटाचलपतिः नवकिसलयनखो भूत्वा लोकामनुगृह्णातीति विदितविषय एव।
ततोऽधुना तेषां वैशिष्ट्यांशान्विमृशामः। आदौ

**१. बृहत् (पेद्द) शेषवाहनम् :** - प्रथमेऽहनि रात्रौ सप्तफणालंकृतसुवर्णवाहनं भवतीदम्। अस्मिन् श्रीभूसमेतः श्रीनिवासः स्वकीयदिव्यमङ्गलविग्रहदर्शनपुरस्सरं भक्तेभ्यः शेषशेषिभावं प्रबोधयति। शेषशेषिभावो नाम परमात्मा शेषि। वयं शेषभूताः इति भावना।

**२. लघुशेषवाहनम् :** - द्वितीयेऽहति प्रातः देव्यौ विना पञ्चफणशोभितलघुशेषवाहने स्थित्वा भक्ताननुगृह्णाति। अयं शेषः नारायणंशसम्भूतः। अपरविष्णुदेहः। **निवास शय्यासन पादुकांशुकोपधानवर्षातपवारणादिभिः। शरीरभेदैः तव शेषतां गतैः यथोचितं शेष इतीर्यते जनैः** इतिवत् शरीरभेदैः विष्णोः शेषत्वपात्रोऽभूत् तदर्थमेवायं शेषेति कीर्त्यते।

भूलोकावतितीर्षोः विष्णोः स्वकीयतनुं पर्वतं इव परिवर्त्य भगवते स्थानं प्रदत्त इति हेतुना द्वितीयवारं सैव वाहनत्वेन परिणितोऽभूत्। पाश्चात्ययात्रिका एतत् बालशेषवाहनमिति नामान्तेरणापि व्यवहरन्ति।

**३.हंसवाहनम्** -द्वितीयस्मिन्दिने रात्रौ श्रीवेङ्कटेशः वीणापाणीव हंसवाहनमारुह्य सर्वाननुगृह्णाति। अयं हंसः जलक्षीरन्यायं प्रदर्शयन् गुणावगुणविचक्षणस्य सङ्केतो भवति। तेन जीवाः आत्मानात्मनोर्विवेकिनः भवितुमर्हन्ति। यः विवेकी स एवात्मदर्शनपरो भवति। तादृशात्मतत्त्वबोधनाय वेङ्कटेशः हंसवाहनमारुह्योद्धरतीति ज्ञेयः।

**४. सिंहवाहनम्:** -तृतीयदिने प्रातः श्रीनिवासः सिंहवानहनमारुह्य प्रजाः अनुगृह्णाति। भगवतः दशावतारेषु नृसिंहावतारः विश्रुतः। योगशास्त्रे सिंहः बलाय वेगसंङ्केताय भावयन्ति। सिंहबलतुल्यभक्तिबलम् अस्मास्वस्ति चेत् अनुगृह्णातीत्यन्तरार्थः।

**५. मुत्यपुपन्दिरिवाहनम् : -** (मौक्तिककण्डपः) तृतीयदिने रात्रौ अस्मिन् वाहने श्रीभूम्युपेतः श्रीनिवासः भक्तेभ्यो दर्शनं प्रयच्छति। ज्यौतिषशास्त्ररीत्या मौक्तिकाः चन्द्रप्रतीका इति भावयन्ति। श्रीकृष्णोऽपि मौक्तिकाभरणधारी इति पुराणेभ्यः ज्ञायते। मौक्तिकछत्राच्छादितं भगवन्तं संदर्श्य स्तोत्रादिकं क्रियते चेत् सर्वान् कामानवाप्य निर्धूतपापत्रयाः भवन्तीति स्मृतिवचनम्।

**६. कल्पवृक्षवाहनम् -** चतुर्थेऽहनि प्रातः दीवीभ्यां सह शेषनगाधीशः कल्पवृक्षवाहने सुन्दरदिव्यविग्रहं प्रदर्शयति। क्षीरसागरमथने उद्भूतामूल्यवस्तुषु कल्पवृक्षः सर्वानतिशेते। अस्य छायायां वासः येन क्रियते तेषां क्षुत्पिपासा न जायते। प्राक्तनजन्मस्मृतिरपि मनसि भासते। अन्ये वृक्षाः स्वकीयानि फलात्येव पयच्छन्ति परञ्चायं कल्पतरुः वाञ्छितकामनाः दत्वा पूरितफलान् कारयति। तथैव भगवानपि इमं वाहनमारुह्य भक्तकल्पतरुर्भवति।

**७. सर्वभूपालवाहनम् : -** चतुर्थे रात्रौ उभयनारीभ्यां सह वेङ्कटेशः अमुं वाहनमाश्रित्य भक्ताननुगृह्णाति। सर्वभूपालः इत्युक्ते राजाधिराजेत्यर्थः। अस्मिन् शुभे अष्टदिक्पालाः स्वामिनमेनं स्वकीयभुजस्कन्धमारोप्य आत्मानं धन्यं मन्यन्ते। तेन प्रजाः तेषां पालते प्रीति पूर्वकचित्ताः भवन्तीति वाहनमेतद्बोधयति।

**८. मोहिनी अवतारः -** शुभेऽस्मित्पञ्चम्यां श्रीनिवासः मोहिनीरूपणे सर्वेभ्यः आशीः प्रयच्छति। पार्श्वे दन्तपल्लक्यां नवनीतश्रीकृष्णरूपेण अभयं प्रयच्छति। अनेन किं ज्ञायते सम्पूर्णप्रपञ्चः भगवतः मायाविलासः इति। तस्मिन् भगवतः भक्ताः ये भवन्ति ते अनायासेनेमां मायांरन्तीति मोहिन्यवतारे श्रीशः उद्बोधयति।

**९.गरुडवाहनम् -** पञ्चमे रात्रौ जगन्नाटकसूत्रधारी श्रीमहाविष्णुः गरुडवाहनमारुह्य शनैश्शनैर्डोलायामनः सर्वान् त्रायते। दास्यभक्त्या ये सेवन्ते तेषां दासः भगवान् भवतीति वाहनमेतत् ख्यापयति। ज्ञानवैराग्यपक्षभ्यां विराजमानगरुडदर्शनेन प्रजा विमोचितपापाः भवन्तीति ज्ञायते।

**१०.हनुमद्वाहनम् -** षष्ठेऽहनि प्रातः रामावतारे वेङ्कटेशः स्वभक्ताञ्जनेयमारुह्य भक्ताननुगृह्णाति। भगवद्भक्तेष्वग्रगण्यः आञ्जनेयः। श्रीरामहनुमन्तौ गुरुशिष्यौ वेदिततत्त्वविवेचनमहनीयौ। तयोः दर्शनेन अस्माकं वेदतत्त्वं अवबोधते।

**११. स्वर्णरथ : -** षष्ठेऽहनि सायाह्ने भगवतः प्रीतिपात्रं स्वर्णरथमारुह्य द्वापरे स्वकीयकृष्णावतारे स्वस्य रथगमनेन द्वारकापुरस्थाः यावत् सन्तोषं ते अनुभूतवन्तः, तं सन्तोषम् एवेदानीं सर्वेभ्यः प्रयच्छति।

**१२. गजवाहनम् -** षष्ठे रात्रौ गजवाहनमारुह्य सर्वान्तोषयति। यथा गजेन्द्रः श्रीमहाविष्णुं वहति तथैव भक्ताः स्वकीयहृदयकुहरे भगवन्तं निवेश्य शरणागताः भवेयुरिति वाहनमेतत् बोधयति।

**१३. सूर्यप्रभवाहनम् -** सप्तमे सप्ताश्वसमन्वितेस्मिन् वाहने भगवान् भक्तान् संरक्षति। सूर्यः तेजोनिधिः। सकलरोगनिवारकः। प्रकृतेश्चैतन्यप्रदाता तादृशसूर्यप्रभावहानारुढभगवद्दर्शनेन आरोग्यं, विद्या, सन्तानफलवन्तः भवन्तीति शास्त्रवचनम्।

**१४.चन्द्रप्रभवाहनम् -** इदं वाहनं सप्तमदिने रात्रौ प्रचलति। अयं चन्द्रः शीतांशुः सुधांशुरिति व्यवहरन्ति। तादृशः चन्द्रः अस्मिन् स्थले वाहनत्वेन प्रतीयते। यथा चन्द्रोदयात्परं कमलानि विकसन्ति तथा चन्द्रवाहनाधिष्ठितवेङ्कटेशस्य दर्शनेन हृदयकमलानि भक्तानां विकसित्वा तापत्रयं दूरीभवति।

**१५. रथोत्सवः -** अष्टमेऽहनि प्रातः दारुरथारूढो भूत्वा सर्वाननुगृह्णाति। एतद्वाहनं रथिनमात्मानमिति, शरीरं रथमिति, बुद्धिस्तु सारथिरिति, मनः प्रग्रहेति, हयाः इन्द्रियाणीति कठोपनिषत् ज्ञानं बोधयति अयमुत्सवः।

**१६. अश्ववाहनम् -** अष्टमेऽहनि रात्रौ अश्ववाहनं भगवान् श्रीशः अधिरुह्य सर्वेषां इन्द्रियनियमनं करोति।

**आदित्यपुराणे -**

**"कल्किनं तुरगारूढं कलिकल्मषनाशनम्।**
**कल्याणदं कलिघ्नं च श्रीनिवासं भजेऽनिशम्।।"**

इतिवत् कलिदोषं संहृत्य दुष्टकलिपुरुषं नाशयतीति वचनादस्माद् ज्ञायते।

एवंरूपेण विविधवाहनाधिष्ठतवेङ्कटेशं संदर्श्य परमानन्दतुन्दिलमनसा संसेव्य सौख्यमार्गं भगवदाशीर्बलेन संप्राप्य धन्यतां प्राप्स्यामः।




प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः।

नीतिकथा

# मूर्खता नाशहेतुः

- वि.प्रदीपकुमारः
चरवाणी - ९४९१६४६५३२

कस्मिंश्चित् ग्रामे कश्चन ब्राह्मणकृषकः आसीत्। सः कृषिकार्याणि कृत्वा दिनानि यापयति स्म। परन्तु तस्य क्षेत्रे फलसमृद्धिः न भवति स्म। कदाचित् सः क्षेत्रे कार्यं कुर्वन् आसीत्। तदा सः समीपे विद्यमानस्य वल्मीकस्य उपरि स्थितम् एकं सर्पं दृष्टवान्। सः चिन्तितवान् - ''एषः सर्पः मम क्षेत्रपालः स्यात्। एतत् अजानन् अहम् एतावत्पर्यन्तं एतस्य पूजां न कृतवान्। अतः एव मम कृषिकार्यं निष्फलं भवति। इतः परम् अहम् एतं निश्चयेन पूजयिष्यामि'' इति। एवं चिन्तयित्वा सः कुतश्चित् क्षीरम् आनीय पात्रे स्थापयित्वा वल्मीकस्य समीपम् आगत्य उक्तवान् - ''भोः क्षेत्रपाल! भवान् अत्रैव अस्ति इति एतावत्पर्यन्तं न ज्ञातवान्। अतः पूजां न कृतवान्। क्षम्यताम्'' इति। अनन्तरं पात्रं तत्र स्थापयित्वा गृहं आगतवान्। परेद्युः तत्र यदा गतं तदा पात्रे एकं नाणकम् आसीत्। सः तं नाणकं स्वीकृतवान्। ततः आरभ्य सः एवमेव प्रतिदिनं क्षीरम् समर्पितवान्, एकं नाणकं प्राप्तवान् च। एवमेव कानिचन दिनानि अतीतानि।

कदाचित् ब्राह्मणः ग्रामान्तरं गतवान्। गमनसमये सः क्षेत्रपालस्य पूजां कर्तुं स्वपुत्रं आज्ञापितवान्। सः पुत्रः वल्मीकसमीपं गत्वा क्षीरं स्थापयित्वा आगतवान्। अनन्तरदिने नाणकं प्राप्तवान्। नाणकं दृष्ट्वा सः चिन्तितवान्, 'निश्चयेन एतस्मिन् वल्मीके प्रभूतं नाणकानि सन्ति। अतः एतं सर्पं मारयित्वा सर्वाणि नाणकानि स्वीकरोमि' इति। अनन्तरदिने क्षीरदानसमये सः दण्डेन सर्पं ताडितवान्। सर्पः रोषेण तं दृष्टवान्। तेन सः पुत्रः मृतः। एवं सः मूर्खपुत्रः दुराशया स्वयमेव नष्टः।








# गरुडवाहनम्

तेलुगु मूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - तुम्बलि शिवाजी
संस्कृतटानुवादः - श्री कृष्णकिशोरः
चरवाणी - ८५२००४३३०४

1 कश्यपप्रजापतेः द्वे पत्न्यौ स्तः विनता, कद्रुः इति। ते एकदा समुद्रतीरे इन्द्रस्य अश्वम् अपश्यताम्। तस्य अश्वस्य पुच्छं श्वेतं वा कालं वा इति तयोर्मध्ये वाग्युद्धमजनि। तत्र कद्रुः वाग्युद्धे मोसपूरितचर्यया जितवती।



2 विनते! त्वं वाग्युद्धे पराभवं प्राप्तवती। तस्मात् नियमानुसारं अधुना मम दसी त्वम्।

3 कद्रो! नियमानुसारं अहं दासी भूत्वा सेवां करोमि।

4 कद्रुः गरुडम् आहूय...

5 गरुड! तव माता मम दासी। अतः त्वमपि दास एव।

6 आम् मातः

7 गरुड! मम पुत्रान् तव भुजस्कन्धे आरोह्य विहर

8 आम् मातः

9 कद्रुपुत्रान् सर्पान् स्वीकृत्य गरुडः सूर्यमण्डलपर्यन्तम् अगच्छत्। तदा सर्पाः...

10 दाहेन भस्मीभवेम... रक्षन्तु! रक्षन्तु!

11 वृष्ट्यर्थं कद्रुः इन्द्रं प्रर्थितवती।

12 आम्! रक्षिताः स्मः

13 कद्रुः गरुडं दूषितवती। तदा गरुडः कद्र्वा....

14 मातः! अस्माकं दास्य परिहाराय किं कर्तव्यम्?

15 अमृतम् आनीय ददातु

16 साहसं कृत्वा गरुडः अमृतं कद्रवे अदात्।

17 युष्माकं दासीत्वं नष्टम्

18 धन्याः वयम्

19 तस्मिन्नेव सन्दर्भे इन्द्रः कद्रुसमीपस्थम् अमृतकलशं स्वीकृत्य गतवान्। विचारेण कद्रुः.....

20 हा धिक्! मम अमृतम्... मम अमृतम्

21 तदा विष्णुः गरुडस्य पुरतः प्रादुरभूत्।

22 गरुड! तव मातृभक्त्या तृप्तोऽस्मि। वरं पृच्छ।

23 स्वामिन्! सर्पान् आहारत्वेन अनुगृह्णातु।

24 तथास्तु वैनतेय!

25 पुनः अन्यत् वरमपि पृच्छतु!

26 भवतां वाहनत्वेन मां स्वीकुरोतु महात्मन्!

27 धन्योऽस्मि स्वामिन्!

28 तस्मादारभ्य अद्य यावत् वाहनत्वेन परमात्मानं सेवते गरुडः।

2

लोकाः समस्ताः सुखिनो भवन्तु।

# रसप्रश्नाः

१. वल्मीके क्षीरं कः क्षिपति?
अ. ब्रह्मा आ. शिवः
इ. नारदः ई. लक्ष्मीः

२. श्रीनिवासः कस्मात् ऋणं जग्राह?
अ. कुबेरात् आ.आकाशराजात्
इ. इन्द्रात् ई. चन्द्रात्

३. श्रीनिवासस्य माता का?
अ. वकुळा आ.अम्बिका
इ. शारदा ई.सत्यवती

४. श्रीनिवासः तिरुमलगिरौ कां उवाह?
अ. पद्मावतीं आ.लक्ष्मीं
इ. यशोमतीं ई. चारुमतीं

५. श्रीनिवासस्य श्वशुरः कः?
अ. कुबेरः आ.आकाशराजः
इ. इन्द्रः ई.च
न्द्रः

६. ब्रह्मोत्सवः कतिदिनेषु प्रवर्तते?
अ. ७ आ. ९
इ. १० ई. ८

७. ब्रह्मोत्सवे प्रसिद्धं वाहनं किम्?
अ. गरुडः आ. सिंहः
इ. शेषः ई. हनुमान्

८. कया आगमरीत्या ब्रह्मोत्सवः चरति?
अ. वैखानस आ.पाश्चरात्र
इ. शैव ई. तन्त्रसार

उत्तराणि - १.अ २.अ ३.अ ४.अ ५.आ ६.इ ७.अ ८.अ

## चित्रलेखनम्

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?





Printed by Sri P.Ramaraju, M.A., Special Officer (Press & Publications), T.T.D. Press, Tirupati and Published by Dr. K.Radharamana,M.A., M.Phil., Ph.D., on behalf of Tirumala Tirupati Devasthanams and Publised at Tirupati - 517 501. Editor: Dr.V.G.Chokkalingam, M.A., Ph.D.



तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवाः
२०२१ अक्टोबर् ०७ तः १५ पर्यन्तम्



## १४-१०-२०२१
## बृहस्पतिवासरः
## प्रातः - रथोत्सवः



## १४-१०-२०२१
## बृहस्पतिवासरः
## रात्रौ - अश्ववाहनम्



SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-09-2021 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023
"LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.



१५-१०-२०२१
भृगुवासरः
प्रातः - चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्